# ॥ श्रीराघवेन्द्रमङ्गलाष्टकम् ॥

श्रीमद्रामपदारविन्दमधुपः श्रीमध्ववंशाधिपः
सच्छिष्योडुगणोडुपः श्रितजगद्गीर्वाणसत्पादपः ।
अत्यर्थं मनसा कृताच्युतजपः पापान्धकारातपः
श्रीमत्सद्गुरुराघवेन्द्रयतिराट् कुर्याद्ध्रुवं मङ्गलम् ॥ १ ॥

कर्मन्दीन्द्रसुधीन्द्रसद्गुरुकराम्भोजोद्भवः सन्ततं
प्राज्यध्यानवशीकृताखिलजगद्वास्तव्यलक्ष्मीधवः ।
सच्छास्त्रातिविदूषकाखिलमृषावादीभकण्ठीरवः
श्रीमत्सद्गुरुराघवेन्द्रयतिराट् कुर्याद्ध्रुवं मङ्गलम् ॥ २ ॥

सालन्कारककाव्यनाटककलाकाणादपातन्जल
त्रय्यर्थस्मृतिजैमिनीयकवितासन्गीतपारंगतः ।
विप्रक्षत्रविडंघ्रिजातमुखरानेकप्रजासेवितः
श्रीमत्सद्गुरुराघवेन्द्रयतिराट् कुर्याद्ध्रुवं मङ्गलम् ॥ ३ ॥

रङ्गोत्तुङ्गतरङ्गमङ्गलकरश्रीतुङ्गभद्रातट
प्रत्यस्थद्विजपुङ्गवालयलसन्मन्त्रालयाख्ये पुरे ।
नव्येन्द्रोपलनीलभव्यकरसद्बृन्दावनान्तर्गतः
श्रीमत्सद्गुरुराघवेन्द्रयतिराट् कुर्याद्ध्रुवं मङ्गलम् ॥ ४ ॥

विद्वद्राजशिरःकिरीटखचितानर्घ्योरुरत्नप्रभा
रागाघौघहपादुकाद्वयचरः पद्माक्षमालाधरः ।
भास्वद्दण्डकमण्डलूज्ज्वलकरो रक्ताम्बराडम्बरः
श्रीमत्सद्गुरुराघवेन्द्रयतिराट् कुर्याद्ध्रुवं मङ्गलम् ॥ ५ ॥

यद्बृन्दावनसप्रदक्षिणनमस्काराभिषेकस्तुति
ध्यानाराधनमृद्विलेपनमुखानेकोपचारान् सदा ।

कारम्कारमभिप्रयांति चतुरो लोकाः पुमर्थान् सदा
श्रीमत्सद्गुरुराघवेन्द्रयतिराट् कुर्याद्ध्रुवं मङ्गलम् ॥ ६ ॥

वेदव्यासमुनीशमध्वयतिराट्टीकार्यवाक्यामृतं
ज्ञात्वाऽद्वैतमतं हलाहलसमं त्यक्त्वा समाख्याप्तये ।
संख्यावत्सुखदां दशोपनिषदां व्याख्यां समाख्यान् मुदा
श्रीमत्सद्गुरुराघवेन्द्रयतिराट् कुर्याद्ध्रुवं मङ्गलम् ॥ ७ ॥

श्रीमद्वैष्णवलोकजालकगुरुः श्रीमत्परिव्राड्भरुः
शास्त्रे देवगुरुः श्रितामरतरुः प्रत्यूहगोत्रस्वरुः ।
चेतोऽतीतशिरुस्तथा जितवरुः सत्सौख्यसम्पत्करुः
श्रीमत्सद्गुरुराघवेन्द्रयतिराट् कुर्याद्ध्रुवं मङ्गलम् ॥ ८ ॥

यः संध्यास्वनिशं गुरोर्व्रतिपतेः सन्मङ्गलस्याष्टकं
सद्यः पापहरं स्वसेविविदुषां भक्त्यैव बाभाषितम् ।
भक्त्या वक्ति सुसम्पदं शुभपदं दीर्घायुरारोग्यकं
कीर्तिं पुत्रकलत्रबान्धवसुहृन्मूर्तीः प्रयाति ध्रुवम् ॥ ९ ॥

॥ इति श्रीमदप्पणाचार्यकृतं श्रीराघवेन्द्रमङ्गलाष्टकम् ॥